# सुदामचरितम्




महोपाध्याय पं० लोकनाथ मिश्र

# सुदामचरितम्

## श्रीकृष्णाद्यनेकस्तवोपेतम्

कविवर लोकनाथ मिश्र प्रणीतं

कवितार्किक नृसिंहदेव शास्त्रिणा
संशोधितम्

हिन्दीभाषानुवादसहितम्

अमूल्य लभ्यम्

प्रकाशक : देवीदत्त
२/६, ईस्ट पटेल नगर, नई दिल्ली-११०००८

●

प्रथमावृत्ति : ५०० प्रतियाँ, गुरु पूर्णिमा
सम्वत् १९६९ सन् १९१२ ई.

●

द्वितीयावृत्ति : १००० प्रतियाँ, अक्षय तृतीया, परशुराम जयंती
सम्वत् २०५४ सन् १९९७

●

चतुर्थावृत्ति : ११०० प्रतियाँ, मकर संक्रान्ति
सम्वत् २०५४ सन् १९९८

●

पंचमावृत्ति : ११०० प्रतियाँ, गुरु पूर्णिमा
सम्वत् २०५७ सन् २००१

●

सौजन्य : श्री सत्यनारायण प्रकाश (सत्ती) पुंज

●

अक्षरयोजन : अक्षर लोक, ४६७९, शोरा कोठी, पहाड़ गंज,
नई दिल्ली-११००५५ दूरभाष : ३५१४५०३

●

मुद्रक : कोणार्क प्रेस
५/२०१, ललिता पार्क, लक्ष्मी नगर, दिल्ली-११००९२

# सुदामचरितम्

श्रीकृष्णाद्यनेकस्तवोपेतम्

प. विवर लोकनाथ मिश्र प्रणीतं

कवितार्किक नृसिंहदेव शास्त्रिणा

संशोधितम्

# सन् १९१२ ई०

लाला लाक्षमणप्रबन्धेन लाहौर पञ्जाब

एकानोमीकल यन्त्रालये मुद्रितम्।

प्रथमावृत्ति ५००] [अमूल्य लभ्यम्

सन् १९१२ में प्रकाशित प्रथमावृत्ति का मुखपृष्ठ १००९

# पुण्य स्मृति में

सुदामचरितम् काव्य के रचयिता पं. लोकनाथ जी मिश्र के सुपुत्र स्वनामधन्य पं. देवीदत्त जी की प्रेरणा, प्रोत्साहन तथा आशीर्वाद से इस काव्य के पाठ की प्रतियोगिता गत अनेक वर्षों से हरिद्वार तथा दिल्ली में चल रही है। वास्तव में यह प्रतियोगिता पं. लोकनाथ जी तथा पं. देवीदत्त जी के प्रति अपने श्रद्धा-सुमन अर्पण करने का ही एक प्रयास है।

गत वर्ष २८-१०-२००० को पं. देवीदत्त जीं के स्वर्गवास के पश्चात उनके नाम से एक "चल-वैजयन्ती Running Trophy" का समावेश भी इस वर्ष से इस प्रतियोगिता में किया गया है। इस विश्वास के साथ कि पूज्य पंडित जी की स्मृति उनके वरद हस्त के रूप में इस प्रतियोगिता में भाग लेने वालों को सदैव आशीर्वाद एवं बल प्रदान करती रहेगी।

विनीत

सत्यनारायण प्रकाश ( सत्ती ) पुंज

# निवेदन

यह पुस्तिका मेरे स्वर्गीय पिता रावलपिंडी निवासी पंडित लोकनाथ मिश्र ने सन १९१२ ई० में तत्कालीन विद्वन्मंडली को भेंट की थी।

अब यह हिन्दी रूपान्तर सहित अपने दोनों स्वर्गीय भ्राता पं॰ केशवानंद व पं॰ दीनानाथ जी की पुण्य स्मृति में कृष्ण प्रेमियों की सेवा में प्रस्तुत है।

इसके रूपान्तर तथा छपाई कार्य के लिये मैं श्री चिरंजीव शास्त्री जी का आभारी हूँ।

देवीदत्त,
२/६, ईस्ट पटेल नगर,
नई दिल्ली-८



# पं. देवीदत्त जी : एक महान व्यक्तित्व

अविभाजित पंजाब के प्रसिद्ध नगर रावलपिण्डी में प्रख्यात विद्वान पं. लोकनाथ जी मिश्र के यहां दिनांक २८ अप्रैल १९०८ को जन्म। बचपन से ही मातृ-पितृ-छाया से वंचित। रावलपिण्डी के गार्डन कॉलिज से १९२७ में प्रथम श्रेणी में बी.ए. आनर्स परीक्षा उत्तीर्ण की। १९३० में दिल्ली के सेना मुख्यालय में नौकरी शुरू कर १९६६ में नेशनल डिफेंस कॉलेज के सचिव पद से सेवानिवृत्त। संस्कृत, हिन्दी, अंग्रेजी, उर्दू, फ्रेंच, जर्मन भाषाओं पर समान अधिकार।

१९५६ में लायंस क्लब के संस्थापक सदस्य तथा बाद में १९६१ में उत्तर भारत के गवर्नर। तीन मूर्ति के पास लायंस विद्या मन्दिर की स्थापना। सनातन धर्म प्रतिनिधि सभा पूर्वी पटेल नगर के वर्षों तक महामंत्री एवं संरक्षक, सनातन धर्म कन्या उच्चतर विद्यालय तथा एस.डी. पब्लिक स्कूल के संस्थापक सदस्य एवं वर्षों तक अध्यक्ष रहे।

गीता का हिन्दी-अंग्रेजी में पद्यानुवाद, कालिदास ग्रन्थावली, स्वप्नवासवदत्तम् किरातार्जुनीयम्, दैनिक सन्ध्या के अंग्रेजी में पद्यानुवाद किये।

लगभग ९३ वर्ष की अवस्था में कार्तिक शुक्ल प्रतिपदा संवत् २०५७ (२८-१०-२०००) में दिल्ली में देहान्त।

ॐ

श्रीकाश्यां पठतानेन लोकनाथेन सूरिणा श्रीमद्विद्वच्छिरोरत्नमहामहोपाध्यायशिवकुमारसुकुमारकुमारयोः व्रतबन्धविवाहमंगलमहोत्सवनिमित्तिकायां विद्वत्संसदि निरवद्यं पद्यद्वयं निर्मायाश्रावि प्राप्तश्च धन्यवादः सभातो द्विगुणामानपूजा च।

तच्च :-

पितुरिवास्तु दिगन्तविलम्बिनी,
विबुधवृन्दधियामपि मोहिनी।
अयि सुधांशुसमानन ते क्षितौ,
शिवकुमारकुमार सरस्वती ।१।
भर्तुर्हिताय निरताविरता तदीय,
चेष्टाविरोधिषु पदार्थशतेषु भद्रे।
सम्पत्सु वा विपदि वेंदुमतीव भर्त्रा,
साकं सदा वस कुमारि शिवञ्च तेस्तु।।२।।

ॐ

काशी मे पढ़ते हुए इन विद्वान लोकनाथ ने विद्वच्छिरोमणि श्रीयुत महामहोपाध्याय शिवकुमार जी के दो सुकुमार बालको के मांगलिक विवाहोत्सव के अवसर पर व्रतबंध (गठजोड़े) के समय उस निमित्त एकत्रित विद्वत्समाज में दो निर्दोष पद्यों की रचना कर के उन्हे सुनाया था और सभा से धन्यवाद तथा दूना मान-सम्मान प्राप्त किया था। वे दो श्लोक हैं -

हे शिवकुमार जी के चन्द्रसमान मुख वाले पुत्र ! पृथ्वी पर तुम्हारी सरस्वती (ज्ञान-संपदा) तुम्हारे पिता के समान सब दिशाओं के छोरो तक फैलने वाली एवं विद्वानो के समाज की बुद्धियो को भी

मोहित करने वाली बने।। १।।

हे शिवकुमार जी की पुत्रवधू ! तुम पति के हित मे लगी रहना। उस की चेष्टाओं से विरोध करने वाले सैंकड़ों पदार्थों से भी विमुख रहना। सम्पदाओं तथा विपदाओं में इन्दुमती (रघुवंशी अज की पत्नी) के समान सदा साथ रहना। तुम्हारा कल्याण हो।

अहोरात्रानृततदितरक्षुत्पिपासाजरामृत्युशोकमोह-प्रमुखप्रतिद्वन्द्विभावस्वभावपुण्यापुण्याद्यनेकविधनि:साराऽनिर्वाच्यपदार्थभरपूरिते संसृतिवर्त्मनि दुर्जरा-जरञ्जरीभावजरणाय 'श्रद्धाभक्तिध्यानयोगादवेहि' 'ब्रह्मतत्त्वानुसन्धानं भक्तिरित्यभिधीयते'' नैर्गुण्यस्था रमन्ते स्म इत्थम्भूतगुणो हरि' रित्यादि: श्रुतिस्मृति सहस्रवचनैर्मुक्तकण्ठतया हरेरहैतुकी भक्तिरेव मु-ख्यतयाभिधीयतइति नाविदितं विदुषाम्, तदनुयायिना निजजनिं सफलां कुर्व्वाणेन कविना श्रीलोकनाथमिश्रेण प्रसादगुणवत्काव्यं सुदामचरितं नाम प्राणायि, अहञ्च तत्संस्करणायाभ्यधायि, तन्मयाद्यापि निरन्तररोगभरमन्थ-रेण यथवसरं सुसंस्कृतं तथापि सीसकाक्षरयोजकप्रमादेन वा ममानवधानतया वासम्भव्येतापि कुहत्यमसंस्करणमत क्षमन्तान्तरा विद्वांस इति सानुनयमभ्यर्थयते-...

नृसिंह [illegible] शास्त्री।

विद्वानों को यह अज्ञात नहीं है कि दिनरात, सत्य-असत्य भूख-प्यास, बुढ़ापा-मृत्यु तथा शोक एवं मोह आदि परस्पर विरोधी भावों के स्वभाव वाले, पाप-पुण्य आदि अनेक प्रकार के नि:सार और विचित्र प्रकार के पदार्थों से भरे हुए संसार-मार्ग मे कठिनाई से जीर्ण किये जाने योग्य जरा-मृत्यु तथा अजरता(आवागमन) के भाव से मुक्त होने के लिये श्रुतियों तथा स्मृतियों में "श्रद्धा भक्ति और ध्यानयोग से

(ईश्वर को ) जानो," "ब्रह्मत्व का अनुसंधान भक्ति कहलाता है," "गुणातीत अवस्था में स्थित हो कर विहार करते थे," "भगवान इस प्रकार के गुणों वाले हैं," इत्यादि हजारों वचनों से भगवान की अहैतुकी भक्ति ही मुख्य रूप से आवश्यक बताई है।

इन वचनों का अनुसरण कर, अपने जन्म को सफल बनाने वाले कवि श्री लोकनाथ मिश्र ने प्रसाद गुण से युक्त 'सुदामचरितम्' नामक काव्य की रचना की है। उन्होनें मुझे इस के सम्पादन के लिये कहा। मैंने आज भी निरन्तर नाना रोगों से शिथिल होते हुए भी जब जैसी आवश्यकता हुई इस का यथावसर भली भाँति सम्पादन कर दिया है। तथापि कम्पोजीटर लोगों के प्रमाद से या मेरी असावधानी से कहीं-कहीं यदि अशुद्धियां आ गईं हों तो इस विषय में विद्वान लोग क्षमा करेंगे यह प्रार्थना है ।

नृसिंहदेव शास्त्री
(तत्कालीन) संस्कृत प्राध्यापक
ओरियंटल कालेज
पंजाब विश्वविद्यालय
लाहौर

# सुदामचरितम्

कृष्णं वृष्णिपतिं नवीनजलदश्यामं सुदाम्नः प्रियं,
गोपीवल्लभमब्जनाभममलं धीरं प्रवीरं वरम्।
धन्यैर्गोपगणैर्बलेन च युतं गाश्चारयन्तं वने,
चेतश्चिन्तय चिन्तनीयचरणञ्चाणूरसञ्चूर्णनम्। १।

हे मन ! वृष्णिवंश के स्वामी,नये मेघ के समान रंग वाले सुदामा के प्रिय मित्र, कमलनाल के सदृश निर्मल, गोपियों के वल्लभ, धैर्यवान्, वीरों में श्रेष्ठ, गोपों तथा बलराम जी के साथ गायों को चराने वाले, चाणूर को विनष्ट करने वाले तथा ध्यानयोग्य चरणों वाले कृष्ण का चिन्तन कर।।१।।

वृथा न मे स्याद्वचसां प्रचारः,
पराङ्मुखी नापि मनःप्रवृत्तिः।
सार्थो यथा स्यात्समयो ममायं,
विचिन्त्य वच्मीति हरेर्गुणांस्ते।।२।।

हमारी वाणी व्यर्थ न हो, मन की प्रवृत्ति अन्य कार्यों में न लगे, मेरा यह समय सार्थक हो, ऐसा विचार करके तुम्हें प्रभु के गुणों का वर्णन करता हूँ।।२।।

ब्रह्मण्यदेवस्य यदूत्तमस्य,
श्रियःपतेः प्रीतिविवर्धनः सः।
सखा सुदामा दमतत्परोऽभूद्,
गृहस्थधर्माभिरतो दरिद्रः।३।

ब्रह्मज्ञों के ईश्वर, यादवों में श्रेष्ठ, लक्ष्मीपति श्री कृष्ण के,

उनकी प्रीति को बढ़ाने वाले, आत्म-दमन में तत्पर, गृहस्थाश्रम धर्म का पालन करने वाले सुदामा नामक अत्यन्त निर्धन मित्र थे।।३।।

तम्ब्राह्मणी ब्रह्मरतं दरिद्रा,
भूरिप्रजा जीर्णपटं वसाना।
क्षुत्क्षामदेहाऽश्रुमुखी वराकी,
बद्धाञ्जलिर्वाचमुवाच नम्रा।। ४।।

उनकी ईश्वर के ध्यान मे रहने वाली, निर्धन, बहुत सी सन्तानों वाली, फटे-पुराने वस्त्रों को धारण करने वाली, भूख-प्यास से व्याकुल देह वाली होकर आंसू बहाने वाली, बेचारी ब्राह्मणी विनम्रतापूर्वक हाथ जोड़ कर बोली--- ।।४।।

ब्रह्मन् भजस्यविरतं भगवन्तमेव,
रात्रौ दिने च विरतो गृहकर्मणि त्वम्।
नास्मान्विलोकयसि दीनतरांस्तपस्वि-
न्नन्नार्थिनः किमु कलत्रसुतातनूजान्।।५।।

हे ब्रह्मन् ! आप गृहकार्यों(आवश्यकताओं) से अलग रहकर दिन-रात ईश्वर की आराधना में लगे रहते हैं। हे तपस्वी! आप अन्न की इच्छा रखने वाली अपनी अत्यन्त दुखी पत्नी एवं सन्तानों की ओर नहीं देखते।।५।।

मां पश्य ते प्रियतमां गृहिणीं सुशीलां,
लीलाविलासविकलां सकलार्थहीनाम्।
क्षीणानिमान्मृदुतनूंस्तनुजासुतांस्त्वं,
कस्माद्विलोक्य न विषीदसि विद्वराद्य।।६।।

हे ब्राह्मणों में सर्वप्रथम गिने जाने वाले ! गृहकार्यों को करने

वाली, सुशील, तरह-तरह के आमोद-प्रमोद के लिये व्याकुल, सभी वस्तुओं से हीन, अपनी पत्नी तथा अत्यन्त क्षीण-कोमल शरीर वाले अपने लड़के-लड़कियों की ओर देखकर आप दुखी क्यों नहीं होते।।६।।

भर्त्तर्भवे भगवतो ननु भक्तिरेव,
सारं न चान्यदिति वेदविदो वदन्ति।
येऽन्धोभविष्यति नवाद्य विचिन्तयेति,
कालं वियन्ति किमु ते न हरिं स्मरन्ति।।७।

हे पतिदेव ! इस संसार रूपी समुद्र को पार करने के लिये भक्ति ही एक आश्रय है, दूसरा नहीं, ऐसा वेदों के ज्ञाता कहते हैं। इसको न विचार करके लोग समय व्यतीत करते रहते हैं और हरि का स्मरण नहीं करते। ।।७।।

स त्वं हरिं स्मर जनार्तिहरं प्रकामं,
शास्त्रञ्च शासय सुखेन सदा परन्तु।
अस्मांस्त्वदेकशरणान्भरणाय कोऽन्यो,
भूयादिति प्रिय विचिन्त्य कुरुष्व यत्नम्।।८।।

लोगों के दुखों को दूर करने वाले प्रभु का स्मरण तथा सर्वदा शास्त्रों के अनुशीलन में आप लगे रहें,परन्तु हम सभी लोग, जो एकमात्र आपकी शरण में हैं उनका भरण-पोषण करने वाला अन्य कौन होगा? हे विप्र! ऐसा सोचकर आप यत्न करें। ।।८।।

बाला इमे प्रियतमाश्च तथा कुमार्यो,
मात्रा विभूषिततनूस्वसखान्समीक्ष्य।
मामेत्य दीनवदना मुहुरर्थयन्ति,
वस्त्रं यदा जननि देहि विभूषणञ्च।।९।।

ये अबोध बालक अपनी माता के द्वारा सुसज्जित शरीर वाले मित्रों को देखकर दुःखी मन से मेरे पास आकर बार-बार याचना करते हैं कि हे मां ! हमें भी वस्त्र और आभूषण दो। ।।९।।

श्रुत्वेति कोमलगिरां वचनं शिशूनां,
कान्त त्वदीयदयिताऽहमवाङ्‌मुखीना।
रोदिम्युदश्रुवदना कृपणा स्वसद्म,
शून्यं तदानुसवनञ्च विलोकयन्ती।।१०।।

हे पतिदेव! कोमल वाणी वाले बालकों के वचनों को सुनकर तुम्हारी यह बेचारी पत्नी अपने खाली घर को देखते हुए नीचे मुख करके दुःखी होकर रोने लगती है।।१०।।

साहं तवातियशसो विदुषां वरस्य,
पत्नी मनोहरतरापि पतिव्रतापि।
वासोविभूषणवरैरविभूषिताङ्गी,
पुष्णाम्यहो कथमिमां स्वशरीरशोभाम्।।११।।

आप जैसे यशस्वी, विद्वान की मनोहर पतिव्रता अच्छे वस्त्राभूषणों से अविभूषित अंगों वाली अपने शरीर की शोभा को कैसे बढ़ा सकती है। ।।११।।

स्वामिन्नमी द्विजवरा हरिभक्तिमन्तो,
विद्यां पठन्ति च वटूनपि पाठयन्ति।
सर्वे कुटुम्बनिरता विरताश्च लोकात्,
कालाऽनुसारि किमु कर्म न भावयन्ति।।१२।।

हे स्वामी ! ये ब्राह्मणों में श्रेष्ठ, ईश्वर के भक्त, विद्याध्ययन करने तथा ब्रह्मचारियों को पढ़ाने वाले, कुटुम्ब-पालन में लीन और

लोक से विरत लोग गृहस्थाश्रम की आवश्यकता एवं समयानुसार कर्म क्या नहीं करते हैं। ।।१२।।

एतं विचार्य सुधिया नयमार्यपुत्र,
पुत्रानिमानपि च माञ्च तथा किशोरीः।
त्वं पालयाशु जहि चालसतां महात्मन् ,
स्वात्मानमुद्धर दरिद्रसमुद्रमग्नम्।।१३।।

बुद्धिपूर्वक नीति का विचार कर हे आर्यपुत्र! अपने इन पुत्रों-पुत्रियों तथा मेरा पालन-पोषण करें। तथा हे महात्मन्! आलस्य त्याग कर दरिद्रतारूपी समुद्र में मग्न आप अपना भी उद्धार करें। ।।१३।।

निःस्वं त्यजन्ति मनुजं सहजा अपि स्वे,
निःस्वाद्बिभेति जनता वनिता अपि स्वाः।
निःस्वस्य नास्ति गतिरत्र परत्र लोके,
निःस्वं जनं न जनयेज्जननीह काचित्।।१४।

निर्धन पुरुष को अपनें सगे भाई भी त्याग देते हैं। निर्धन से जनता और पत्नी भी डरती है। निर्धन की इस लोक में तथा परलोक में गति नहीं है। निर्धन पुरुष को इस संसार में कोई मां जन्म न दे। ।।१४।।

सन्ध्यां करोषि च यथाऽनतिवेलमार्य,
नित्यं यथापि भजसे व्रजभूषणांघ्रिम्।
अध्यापयस्यनुदिनं निगमं द्विजांस्त्वम्,
विद्वंस्तथानुसमयं भर कुटुम्बम्।।१५।।

जिस तरह आप नित्य समय से संध्या करते हैं, जिस तरह

नित्य भगवान का भजन करते हैं तथा वेदाध्ययन करते हैं, उसी तरह हे विद्वन्! परिवार का पालन-पोषण समयानुसार कीजिये। ।।१५।।

ईदृग्विधं द्विजवरं हरिपादपद्म-
सौरभ्यलुब्धमधुपं हृदयङ्गमन्त्वाम्।
ब्रूयां कदापि न च किञ्चिदपि प्रभोऽहं,
गेहस्थधर्मभरखिन्नमना न चेत्स्याम्।।१६।।

हे द्विजवर! इस प्रकार भौंरे की तरह भगवान के चरण कमल की सुगन्धि के लोलुप आपको, यदि मैं गृहस्थ धर्म पालन में मन वाली न होती तो कुछ भी न बोलती। ।।१६।।

इत्थं कुटुम्बभरणाक्षमया गृहिण्या,
किञ्चित्सरोषकरुणाविलनेत्रया सः।
प्रोक्तं वचोऽतिकृपणं कृपणो निशम्य,
नेत्रे निमील्य सुचिरं रुचिरं बभाषे।।१७।।

इस प्रकार कुटुम्ब का भरण करने में असमर्थ, कुछ क्रोध और करुणा से युक्त दृष्टिवाली गृहिणी के दीन वचन सुनकर देर तक आंख मूंदकर सुदामा सुन्दर वचन बोले। ।।१७।।

स्वल्पाक्षरार्थनिरता सदलङ्कृतिस्ते,
श्रीव्यासदेवकवितेव पवित्रवाणी।
पूज्या पुमर्थकुसुमैः सुसमैर्मृगाक्षि,
नित्यं गृहस्थविषये वसता मयेयं।।१८।।

हे मृगनयनी! थोड़े शब्दों में बहुत (गम्भीर) अर्थों वाली, सत्य से अलंकृत, श्रीव्यासजी की कविता के समान तेरी पवित्र वाणी है।

गृहस्थी में रहते हुए मुझे नित्य चार पुरुषार्थ रूपी सुसमान पुष्पों से इस वाणी का पूजन करना चाहिए। ।।१८।।

सत्यं ब्रवीषि सुभगे मम दुर्भगस्य,
कान्तासि कञ्जवदना मदनालसा त्वम्।
योग्यासि भोक्तुमबले परमां समृद्धिं,
नार्हासि सोढुमिह सुन्दरि दुःखजालम्।।१९।।

हे सौभाग्यशालिनी! तू सत्य कहती है। यह मेरा दुर्भाग्य है कि कमल के समान मुख वाली, कामालसा तू मुझ अभागे की पत्नी है। हे अबले! तू परम समृद्धि को भोगने योग्य है, हे सुन्दरी! तू दुःखों को भोगने योग्य नहीं है। ।।१९।।

किञ्चेन्दुबिम्बवदने ललने गृहेशि,
धाता सृजज्जगदिदं विविधं पुरस्तात्।
वर्णाश्रमेतरगणस्य पृथक् स्वधर्मान्,
अस्मिन्परत्र च हितान् रचयाम्बभूव।।२०।।

किन्तु, चन्द्रमा के बिम्ब के समान सुन्दर मुख वाली हे गृहस्वामिनि! ब्रह्मा ने इस संसार का पूर्वकाल में सृजन करते हुए भिन्न-भिन्न समूहो के इस लोक और परलोक में हितकारी वर्ण आश्रम तथा विविध धर्मों की रचना की। ।।२०।।

तत्रादिशच्छतधृतिर्धरणीसुराणां,
धर्मञ्चतुर्भिरिति नो वदनैर्हितैषी।
संयच्छतेन्द्रियगणं भजतोञ्छवृत्तिं
कृष्णं कलंकरहितं स्मरत द्विजेन्द्राः ।।२१।।

तब हमारे हितैषी धृतिमान् ब्रह्मा ने अपने चारों मुखों से

भूदेव(ब्राह्मणों) के धर्मों को इस प्रकार बताया कि हे ब्राह्मणो! इन्द्रियों को वश में करो,उञ्छ वृत्ति को अपनाओ और कलंकरहित श्रीकृष्ण का स्मरण करो। ।।२१।।

इत्थं तपोदमयुतं दयिते विरक्तम्,
भक्तं भवाम्बुधिहरस्य परस्य पुंसः।
मां योजयस्यविरतं गृहकर्म्मणि त्वम्,
पार्श्वस्थिताऽपि न च वेत्सि मदीयभावम्।।२२।।

इस प्रकार तप और आत्मदमन में लगे हुए विरक्त तथा संसार-सागर से तारने वाले परमपुरुष श्रीकृष्ण की भक्ति में लीन मुझे तुम निरन्तर गृहकार्य में लगाये रखती हो। हे प्रिये! मेरे पास रह कर भी तुम मेरे भाव को नहीं समझ रही हो।।२२।।

मुग्धे विभूषणवरैर्न विभूषितापि,
चित्राम्बरैर्वरतनो न विचित्रितापि।
शुश्रूषयैव गजगामिनि मानसं मे,
नित्यं विमोहयसि मोहिनि चञ्चलाक्षि।।२३।।

हे प्रिये ! अच्छे आभूषणों को न पहने हुई भी तथा चित्र-विचित्र वस्त्रों को न धारण करती हुई भी, हे गजगामिनि! हे चंचल नेत्रों वाली! हे मोहिनी! तूने अपनी सेवा और अपने चंचल (स्वभाव से) मेरे मन को मोह लिया है। ।।२३।।

अस्मल्ललाटपटले विधिना व्यधायि,
रंकत्वमंकनविधौ सुधवे ध्रुवन्नु।
यस्माद्वयं निगमगा नयगा विधिज्ञाः,
प्राज्ञे कुटुम्बभरणे नहि पारयामः।।२४।।

ब्रह्मा जी ने हमारा भाग्य लिखते समय हमारे ललाट में दरिद्रता अंकित कर दी है। इस कारण हे बुद्धिमति! हम लोग वेद मार्ग का, नीति व विधि का पालन करते हुए भी परिवार का भरण नहीं कर पाते। ।।२४।।

निष्किञ्चनस्य पृथुकाः पृथुलोचनेऽमी,
क्षुद्व्याकुलाः कलरवा वसनैर्विहीनाः।
उत्प्लुत्य धूलिभरितास्त्वरितम्ममांके,
चेतो हरन्ति नितरां न यदा रमन्ते।।२५।।

हे बड़े-बड़े नेत्रों वाली! जिसके पास संसार में कुछ भी नहीं है, ऐसे मेरे ये बालक भूख-प्यास और वस्त्रहीनता से व्याकुल तथा धूल से धूसरित हो जल्दी ही हमारी गोद में आकर चित्त हरने लग जाते हैं। ।।२५।।

एवं यदूत्तमधनस्य यदृच्छया यत्,
लाभेन- तुष्टमनसो मम मानसज्ञे।
विज्ञे प्रवर्तयसि किं मृगतृष्णिकाम्भे,
गन्धर्वपत्तनसमे विषमे भवाब्धौ।।२६।।

यदुपति श्रीकृष्ण की यदृच्छा से प्राप्त वस्तुओं से ही सन्तुष्ट रहने वाले मेरे मन को जानने वाली हे बुद्धिमति! तू गन्धर्वपुरी के समान अवास्तविक, मृगतृष्णारूपी जल वाले भवसागर की ओर क्यों प्रवृत्त हो रही हो।।२६।।

कुर्याम् प्रयत्नमपि चेद्धनसञ्चयार्थम्,
दैवं विना कथमये पुरुषार्थसिद्धिः।
तद्दृष्टवत्यसि चिरान्मम तु व्यतीतं,

द्रष्टासि सम्प्रति भविष्यमपीह भद्रे।।२७।।

हे भद्रे! धन इकट्ठा करने का बहुत प्रयत्न करने पर भी भाग्यहीनता के कारण कार्य-सिद्धि कैसे हो सकती है। तुम बहुत समय से मेरा भूतकाल देखती और जानतीं हो। अब भविष्य को भी देख लोगी।।२७।।

अन्यच्च मे श्रृणु वचोऽस्मि सखा मुरारे-
र्लक्ष्मीपतेर्जनगतेर्जगदीश्वरस्य।
विख्याततीर्थयशसो वसुदेवजस्य,
दारिद्र्यदुःखदहनस्य सखिप्रियस्य।।२८।।

और भी मेरी बातों को सुनो कि सबके अन्दर निवास करने वाले लक्ष्मीपति जगदीश्वर मुरारि का मैं मित्र हूं। उनका यश संसार में विख्यात है। वे वसुदेव जी के पुत्र अपने प्रियजनों के प्रिय तथा उनकी दरिद्रता के दुःख को दूर करने वाले हैं। ।।२८।।

यो धर्मभूमिसुरवर्यगवां वरोरु,
गुप्त्यै सुरेतरचमूक्षपणाय साक्षात्।
अभ्यर्थितोऽर्थिसुरधेनुरजेन विष्णु,
राविर्बभूव भगवान्वसुदेवगेहे।।२९।।

हे सुन्दर जांघों वाली! देवता धर्म और गौओं की रक्षा तथा असुर सेना के विनाश के लिये देवता, गाय और ब्रह्मा की प्रार्थना को सुनकर ये साक्षात् भगवान विष्णु वसुदेव जी के घर अवतरित हुए हैं। ।।२९।।

योपूतनामगमयत्सुरलोकमीशो,

विद्वेषिणीं सखि सखा मम माधवोऽसौ।
अन्यांश्च कंससहितानहितान्सुराणाम्,
चाणूरतोशलशलानथमुष्टकादीन्।।३०।।

(जिन्होंने) द्वेष रखने वाली पूतना को मारा था हे सखि! वे ही माधव मेरे मित्र हैं। उन्होंने ही देवताओं का अहित करने वाले कंस सहित अन्य बहुत से अधर्मियों, चाणूर, तोशल, शल, मुष्टक आदि राक्षसों का वध किया। ।।३०।।

स द्वारकां मणिसुवर्णमयीं पुरीं स्वां,
सम्भूषयत्ययि सुभाषितभाषिणीशः।
सम्प्रत्यशेषसुरगीतपवित्रकीर्तिः,
स्त्रीपुत्रमित्रसहितः सति मे वयस्यः ।।३१।।

हे अच्छे वचन बोलने वाली! हे सती! वे अब सुन्दर सुवर्ण और मणियों से मण्डित अपनी नगरी द्वारिका को मित्र, स्त्री और पुत्रों के साथ रहते हुए सुशोभित करते हैं। देवता उनकी पवित्र कीर्ति का गान करते हैं। वे हमारे समान आयु के मित्र हैं।।३१।।

तन्निर्धनोत्तमधनं स्थिरमस्थिराक्षि,
निष्किञ्चने भज जनार्दनमाप्तकामं।
आराधितो हृदि हृषीकपतिः प्रियेऽसौ,
पूर्णान्करिष्यति समस्तमनोरथांस्ते।।३२।।

हे चंचल नेत्रों वाली! वे ही (भगवान श्रीकृष्ण) निर्धनों के उत्तम, स्थिर धन हैं। हे निर्धन! (उन) आप्तकाम जनार्दन का भजन कर। प्रिये ! उन इन्द्रियों के स्वामी (भगवान श्रीकृष्ण) की आराधना हृदय से करने पर वे प्रसन्न होकर तुम्हारी सभी कामनायें

पूर्ण करेंगे।।३२।।

यन्नामसंस्मरणमात्रमपीह लोके,
प्रेयस्यमंगलकलंकविंकारहारि।
रंकत्वमिच्छसि गतं यदि सुन्दरि त्वम्,
उच्चैस्तरां भगवतो रट नामधेयम् ।।३३।।

हे प्रिये! उनके नाम का स्मरण करना मात्र इस संसार में अमंगल तथा कलंक एवं समस्त विकारों का हरण करने वाला है। हे सुन्दरी! यदि निर्धनता को दूर करना चाहती हो तो उच्च स्वर से प्रभु का नाम रटो। ।।३३।।

श्रुत्वेति वाक्यममलं कमलानना सा,
भर्त्रा समीरितमुदारमुदारशीला।
ईषद्विहस्य वचनं रचनाविशेषं,
प्रोवाच मञ्जुलमलं ललना ललामं।।३४।।

पति के द्वारा यह पवित्र वाणी सुनकर कमलमुखी, उदार स्वभाव वाली वह स्त्री कुछ हंसकर मधुर रचना विशेष युक्त सुन्दर वाणी से बोली। ।।३५।।

सख्यं कदा नरवरेण गदाधरेण,
श्रीवत्सकौस्तुभसुदर्शनधारिणाऽभूत्।
कुंत्राधनस्य कुपटावृतरंकराज,
पीताम्बरेण मणिकुण्डलहारिणा ते।।३५।।

गदा, श्रीवत्स, कौस्तुभमणि तथा सुदर्शन चक्रधारी मनुष्यों में श्रेष्ठ भगवान श्रीकृष्ण से कब मित्रता हुई? कहां तो दरिद्रता रूपी पर्दे

से ढके आप और कहां पीताम्बर पट, मणि-कुण्डल, हार से सुशोभित भगवान।।३५।।

संस्मारितेश्वरकथ: सुकथो गृहिण्या,
वाष्पाकुल: पुलकितांगरुहस्तपस्वी।
स्वानन्दसंप्लवविलीनमना: सुदामा,
तूष्णीम्बभूव न च काञ्चिदुवाच वाचं।।३६।।

पत्नी द्वारा प्रभु की कथा याद दिलाने पर सुन्दर कथा करने वाले तपस्वी सुदामा जी प्रेम में रोमांचित-पुलकित होकर आंसू बहाते हुए, अपने आनन्द में लीन (विभोर) होकर चुप हो गए, कुछ भी बोल न सके। ।।३६।।

सञ्चितयंश्चिरतरं ललितानि तानि,
सान्दीपिनेर्द्विजवरात्पठता कृतानि।
कृष्णेन मानसहराणि विचेष्टितानि,
सालोक्यमाप्त इव संशुशुभे सुदामा।।३७।।

ब्राह्मण श्रेष्ठ सान्दीपिनि के पास पढ़ने के समय श्रीकृष्ण द्वारा किये गये उन मनोहर, ललित कार्यों का देर तक चिन्तन करते हुए सुदामा मोक्ष को प्राप्त व्यक्ति के समान शोभा पाने लगे।।३७।।

यद्योगिनो विषयभोगविरक्तचित्ता:,
कालेन दीर्घवयसा परिपक्वयोगा:।
प्राणान्निरुध्य हृदयेऽनुभवन्ति शर्म,
वाचामगोचरमवाप हरिप्रियोऽसौ।।३८।।

विषय-वासना भोग आदि से विरक्त चित्त होकर योगी लोग

बहुत समय में वाणी से अगोचर जिस कल्याण को हृदय में प्राण वायु को रोक कर प्राप्त करते हैं, उसे हरि के प्रिय उस सुदामा ने प्राप्त कर लिया।।३८।।

ध्यायन्मुकुन्दचरणं शरणं गतानां,
संसारसागरहरं कमलाविकाशं।
उच्चैः श्वसन्नयनयोर्जलमुत्सृजंश्च,
वाचं विचित्रधिषणोऽनुजगाद रम्यां।।३९।।

शरण में आये हुये लोगों के संसार सागर के कष्टों को हरण करने वाले, लक्ष्मीपति उन भगवान के चरणों का ध्यान करते हुए विचित्र बुद्धि वाले (सुदामा जी) ऊंचे-ऊंचे श्वास लेते हुये, नेत्रों से जल गिराते हुये, सुन्दर वाणी बोले।।३९।।

विद्यां यदा गुरुकुले पठितुं प्रियेऽहम्,
आवन्तिकां गुरुपुरीमगमं तदा हि।
अध्येतुमागमि पतत्पतिगामिनापि,
तत्रावयोर्निवसतोः प्रियता पराऽसीत्।।४०।।

हे प्रिये! गुरुकुल में विद्या पढ़ने हेतु जब मैं गुरुपुरी अवन्तिका गया था तभी पढ़ने के लिये गरुड़ की सवारी करने वाले भगवान भी वहां आये थे। वहां निवास करते हुए हमारा परस्पर बहुत प्रेम हो गया।।४०।।

एकासनासनसहाध्ययनाशनानि,
कर्माणि नन्दतनयेन समं ममासन्।
यानि स्मरन्ननुदिनं हृदयंगमानि,
सत्यं ममास्ति शिथिला व्यवहारवृत्तिः।।४१।।

एक ही आसन पर बैठते थे, एक साथ भोजन-अध्ययन करते

थे, नन्द के पुत्र के साथ उन हृदयंगम कार्यों को स्मरण करके, सत्य कहता हूं कि मेरी वृत्ति व्यवहार में शिथिल हो जाती है।।४१।।

अन्येऽपि छात्रनिवहा: कृतपुण्यपुञ्जा:,
सान्दीपिनेर्निखिलशास्त्रविदोऽपठन्स्म।
आनञ्च तानपि समान्समदृक् परन्तु,
प्रेमावधिं मयि चकार सुदामनीश:।।४२।।

अनेक पुण्यकर्मा दूसरे छात्र भी समस्त शास्त्रों को जानने वाले सान्दीपिनि गुरु से पढ़ा करते थे। समद्रष्टा भगवान उन्हें समान दृष्टि से स्नेह करते थे, किन्तु मुझ सुदामा पर प्रभु का परम प्रेम था।।४२।।

आसन्सुमंगलमयानि दिनानि तानि,
श्यामेन साकमबले गमितानि यानि।
हार्दम् ब्रवीमि श्रृणु सुन्दरि तं सखायं,
कृष्णं विना मम मुदे नहि किञ्चिदस्ति।।४३।।

हे अबले! भगवान के सहवास में बीते हुये वे दिन बहुत मंगलमय थे। हे सुन्दरि ! सुनो, मैं हृदय से कहता हूं कि मित्र श्रीकृष्ण के बिना (मुझे) कोई प्रसन्नता नहीं है।।४३।।

पद्मापते: प्रियतमो द्विज एष पुण्यो,
लोके जनश्रुतिमियेष ममेतिवाद:।
एतेन मंगलवरेण वयं कृतार्था,
मन्यामहे जगदिदं तृणवत्समस्तम्।।४४।।

'लक्ष्मीपति का प्रियतम यह पुण्यात्मा ब्राह्मण है,' यह जनश्रुति

लोक में हो गई थीं। मैं ऐसे मंगलप्रद भगवान के द्वारा कृतार्थ किया गया हूं। इसके अतिरिक्त मैं संसार को तृण-समान समझता हूं।।४४।।

श्रुत्वेरितं निजधवेन वचो वरेण्यं,
श्रीदामवामदयिता दयितं तमाह।
धन्योऽसि मान्यतम पूज्यतमश्च यस्य,
साक्षात्सखा नरहरिस्तव चक्रपाणि:।।४५।।

अपने पति सुदामा के द्वारा ऐसी उत्तम वाणी सुनकर (उनकी) प्रिय पत्नी बोली-'आप धन्य हैं जो सबके पूज्य, मान्य, साक्षात् भगवान चक्रपाणि आपके मित्र हैं।' ।।४५।।

योऽवीवृधद् द्रुपदजापरिधानवस्त्रं,
योऽमूमुचद् गजपतिं झषराजपाशात्।
गर्भे ररक्ष कुरुपाण्डववंशबीजं,
सोऽयं सखा किमथवा तव कोऽपि चाढ्य:।।४६।।

जिसने द्रौपदी के चीरहरण के समय वस्त्र बढ़ाया था, जिसने ग्राह के मुख से गजराज को बचाया था, पाण्डवों के वंश की रक्षा गर्भ में की थी- वे ही श्रीकृष्ण आपके सखा हैं अथवा कोई और हैं? ।।४६।।

हंहो कथं मम सुहृत्तवदृष्टपूर्वो,
जानास्यहो कथममुं गृहसंस्थिता त्वं।
व्याजीगणस्त्वमबलाऽस्य गुणान्समग्रान्,
यद्गायनेऽपि मुनयो नहि यान्ति पारं।।४७।।

(सुदामा जी ने पूछा) अरे! क्या मेरे मित्र को तुमने पहले

कभी देखा है? घर में रहत हुए भी तुम उन्हें कैसे जानती हो? तुमने अबला होते हुए उनके समस्त गुणों की गणना कर दी है जिन का मुनि भी पार नहीं पा सकते।।४७।।

बाल्ये मया निजपितुर्वचनाच्छ्रुतानि,
तच्छात्रवर्गवदनादपि संश्रुतानि।
कर्माण्यसीमसुखदानि महत्तमस्य,
त्वद्वक्त्रकञ्जनिसृतान्यधुना श्रृणोमि।।४८।।

(पत्नी बोली) असीम सुख देने वाले उन महत्तम(कृष्ण) के कर्मों को बचपन में मैंने अपने पिता के मुख से सुना है और उनके छात्र वर्ग के मुख से भी सुनी हूं और अब आप के मुखकमल से इस समय सुन रही हूं।।४८।।

यद्यस्ति ते प्रियसुहृद्द्विजदेवदेव-
स्तीर्थश्रवा: श्रमणगीतकथ: कथञ्चित्।
द्रष्टुं व्रजाद्य दयितं यदुपत्तनं तं,
यद्दर्शनेन विपदो विमुखीभवन्ति।।४९।।

हे पतिदेव! यदि आप के प्रिय ब्राह्मणों के देव भगवान हैं, तीर्थों में भी जिनकी कथा मंगलमय है, साधुओं में जिनका कथन किया जाता है, तो उन प्रिय मित्र को देखने के लिए आप आज ही द्वारिका जायें। जिनके दर्शन से ही समस्त विपत्तियां दूर हो जाती हैं।।४९।।

यो ब्राह्मणाय विदुषे शमतत्पराय,
सीदत्कुटुम्बबहुलाय भवद्विधायं।
ग्रामान्गृहाणि मणिहेममयानि तूर्णम्,
पूर्णो ददाति ददतां प्रवरो महात्मा।।५०।।

देने वालों में श्रेष्ठ वे पूर्ण प्रभु, आचार-विचार युक्त, शम-दम का पालन करने वाले, अत्यंत बड़े और दु:खी परिवार वाले आप जैसे ब्राह्मण को ग्राम, गृह, मणि, सुवर्ण आदि से युक्त गृह शीघ्र ही दे देंगे।।५०।।

तं ब्राह्मणप्रियमनन्तमपारशक्तिं,
श्रीवत्सवक्षसमलं ललितं त्रिलोक्याम्।
बर्हावतंसमतसीकुसुमावभासं,
सद्भक्तवत्सलममुं शरणं प्रयाहि।।५१।।

उन ब्राह्मणप्रिय, अनंत-अपार शक्ति संपन्न, श्रीवत्स यंत्र से सुशोभित वक्षस्थल वाले, तीनों लोकों में श्रेष्ठ, सुन्दर मोर पंख धारण करने वाले, अलसी के फूल सदृश रंग वाले, भक्तवत्सल भगवान की शरण में जाइये।।५१।।

त्वामागतं निजगृहेऽतिथिमातिथेय:,
पूज्यं चिरान्नयनगोचरमिष्टबन्धुम्।
दृष्ट्वैव हृष्टहृदय: सहसोत्थित: सन्,
धावन्द्रुतं तव समीपमुपैष्यतीश:।।५२।।

अतिथि सेवा करने वाले वे प्रभु अपने घर में अतिथि रूप में आये, पूज्य, चिरकाल पश्चात् दिखे प्रिय बन्धु को देखते ही प्रसन्न हृदय होकर तत्काल उठकर दौड़ते हुये आपके पास आवेंगे।।५२।।

सम्पूजयिष्यति सुरैरपि पूजनीयो,
नारायणो नरसखोऽखिलसत्त्वराशि:।
स्नेहेन दीर्घसमयेन गृहागतं त्वां,

दामोदरो निजसखं सुमुखं सुखात्मा।।५३।।

देवताओं के पूज्य, नरसखा, सम्पूर्ण प्राणियों के अधिष्ठान, सुखात्मा भगवान दामोदर नारायण स्नेहपूर्वक बहुत दिनों के बाद घर आने पर अपने मित्र आपकी अत्यधिक स्नेह से पूजा करेंगे।।५३।।

यद्यत्त्वमिच्छसि गृहं विपुलं धनं वा,
तत्तत्प्रदास्यति ततोऽधिकदो वदान्यः।
पात्राय तुभ्यमबलादिमते द्विजाय,
सख्ये हिताय निरताय तदीयदास्ये।।५४।।

आपकी जो-जो इच्छा होगी-घर या विपुल धन वह सब तथा उससे भी अधिक वे आप जैसे पत्नी-पुत्र वाले ब्राह्मण, पात्र, मित्र के हितकारी, उनकी दासता में लीन पुरुष को वे देंगे।।५४।।

नो चेद् गमिष्यसि भविष्यति सुप्रभाते,
संयाचितुं भगवतो द्रविणं गृहं वा।
मां त्वं स्मरिष्यसि गतां परलोकमद्य,
धिग्जीवनं धनविभोगविहीनमत्र।।५५।।

प्रातः होते ही भगवान से धन और घर माँगने के लिये यदि आप नहीं जाएंगे तो परलोक में गई मुझे याद करते रहेंगे। इस लोक में धन और भोग विहीन जीवन को धिक्कार है।।५५।।

इत्याग्रहेण निजवल्लभयेरितः सः,
कृष्णप्रियः स्ववनितामिदमाजगाद।
कल्याण्युपायनमपि प्रभवे प्रदेयं,
वस्त्रे बधान मम पुस्तकमासनञ्च।।५६।।

पत्नी द्वारा इतना आग्रह करने पर श्री कृष्ण के सखा उस से बोले- हे कल्याणि ! भगवान के लिये भेंट देने योग्य कुछ वस्तु, हमारी पुस्तक और आसन वस्त्र में बांध दो।' ।।५६।।

सा सुन्दरी निजगृहान्तिकभूमिदेवा-
दादाय तण्डुलकणान्प्रसृतिप्रमाणान् ।
चैले निबध्य सुदृढं निजनायकाय,
प्रातः प्रयाणनियताय ददौ हितेन।।५७।।

प्रात:काल उस सुन्दरी ने अपने घर के पड़ोसी ब्राह्मण से मुट्ठी भर चावल के टुकड़े लाकर एक कपड़े में मजबूत बाँधकर सवेरे जाने का निश्चय किए हुए अपने पति को दे दिया। ।।५७।।

सा शर्वरी कथयतोः पलकार्धवत्तां,
वार्तां जनार्तिहरणस्य मुदा व्यतीता।
कल्ये चचाल ललनाकृतमंगलोऽसौ,
श्रीद्वारकां हरिपुरीं मिलितुं सखायम्।।५८।।

वह रात्रि लोगों के कष्टों को दूर करने वाले भगवान की वार्त्ता में ही आधे पल के समान आनंद से व्यतीत हो गयी। प्रात:काल पत्नी के द्वारा मंगल कार्य किए हुए सुदामा अपने मित्र को मिलने के लिए भगवान की नगरी द्वारिकापुरी को चले। ।।५८।।

पुंस्कोकिलः स्वपिकया प्रियया समेतो,
दक्षे चुकूज सहकारतरौ निषण्णः ।
वामे शिखी तमनु कीरवरो व्रजन्तं ,
कन्या जगाम च पतंगकरः समक्षे।।५९।।

पुंस्कोकिल अपनी मधुर आवाज में दाहिनी ओर के आम्र वृक्ष पर

बैठा हुआ अपनी कोकिला के साथ कूज रहा था। बायीं ओर मोर, उसके पीछे तोता, सामने कन्याएं तथा सूर्य की किरणें, जाते हुए सुदामा के पीछे आ रही थीं। ।।५९।।

एवं शुभानि शकुनानि विलोक्य विद्वान्,
पद्भ्यां व्रजन् व्रजपतेर्वृजिनापहानि।
गायन्स्मरन्नथ पठंश्चरितानि सख्यु-
र्नाना मनोरथशतानि ततान चित्ते।।६०।।

इस प्रकार के शुभ शकुनों को देखते हुये, पैरों से चलते हुये, पापों को दूर करने वाले भगवान के गुणों को गाते हुये, अपने मित्र के चरित्रों को पढ़ते हुये विद्वान(सुदामा) अनेक मनोरथ अपने चित्त में भरने लगे।।६०।।

प्रस्पंदते प्रतिपलं मम दक्षचक्षुः,
वामेतरः स्फुरति चाद्य शुभो ममांसः।
उत्कण्ठते मम मनो न च मे श्रमोऽस्ति,
नूनं भविष्यति मुकुन्दसमागमो मे।।६१।।

हर समय मेरी दाहिनी आँख और दाहिना कंधा फड़क रहा है। मन में उत्कण्ठा हो रही है। चलने में परिश्रम नहीं मालूम पड़ता। निश्चय ही भगवान के शीघ्र दर्शन होगें।

किं पूर्वजन्मनि कृतं सुकृतं मयाहो,
किंवा तपोऽतपि परं धनमप्यदायि।
किं वा मुरारिचरणार्चनमत्यकारि,
श्रीकृष्णदर्शनमिदं कथमन्यथा मे।।६२।।

(सुदामा जी सोचते हैं कि) मैंने पिछले जन्म में कौन सा अच्छा कर्म किया था, कौन सा तप किया था, परम धन दिया था? श्रीकृष्ण के चरण की अति पूजा की थी? नहीं तो भगवान के दर्शन कैसे होते?।।६२।।

यद्दर्शनार्थमवनीपतयोऽपि राज्यं,
प्राज्यं ज़हुस्तृणमिवर्षिगणाश्च सिद्धाः।
श्रद्धातपोदमयुता विरता महान्तः,
सन्तो वनं निविविशुस्तदु मेऽद्य भावि।।६३।।

जिनके दर्शन के लिए भूपति राज्यों को तृण की तरह त्याग कर, ऋणिगण-सिद्ध श्रद्धा एवं तप से युक्त होकर, महात्मा और सन्त विरक्तिपूर्वक जंगलों में निवास करते हैं, उनके दर्शन आज मुझे होंगे।६३।।

त्रेधापि जन्म सफलं भविता ममाद्य,
विद्या गुरोरधिगतापि फलिष्यतीयम्।
धन्या ममाद्य जननी जनकश्च धन्यो,
धन्योऽहमाशु भवितास्मि निरीक्ष्य कृष्णम्।।६४।।

तीन प्रकार से आज मेरा जन्म सफल होने वाला है- गुरु से प्राप्त विद्या फलवती होगी, आज मेरे माता-पिता धन्य हो गये और शीघ्र ही श्रीकृष्ण का दर्शन करके मैं भी धन्य होने वाला हूँ।।६४।।

मां ज्ञास्यते कथमसौ चिरतोऽद्य दृष्टम्,
ज्ञात्वा च वक्ष्यति सखे कुशलं तवेति।
प्रेम्णोरसा दृढतरं परिरप्स्यते माम्,

एकासने सह मया विहरिष्यतीशः।।६५।।

चिरकाल के पश्चात् दिखाई दिये मुझे वह कैसे पहचानेंगे? पहचान कर कहेंगे- हे मित्र! कुशलपूर्वक तो हो ना? प्रेमपूर्वक कस कर छाती से लगा लेंगे और वह स्वामी मेरे साथ एकासन पर बैठेंगे।।६५।।

एवं मनोरथकदम्बरथाधिरूढो,
विश्वेश्वरस्य परमो हृदयंगमः सः।
कृष्णस्य विश्वजयिनो नगरीमवाप,
दिव्यां विचित्ररचनारचितां विशालाम्।।६६।।

इस प्रकार मनोरथों के रथ पर चढ़े हुए, विश्वेश्वर के परम हृदयस्थ वह सुदामा विश्वविजयी कृष्ण की दिव्य, विचित्र रचनायुक्त विशाल नगरी में पहुँचे।।६६।।

सा यादवेन्द्रनगरीन्द्रपुरीव रम्या,
प्रासादहर्म्यमणिचत्वरमञ्जुवीथी।
प्राकारगोपुरतटागसमाजकूपा,
स्वारामकुञ्जभवनोपवनातिधन्या।।६७।।

इन्द्र पुरी जैसी यदुराज की वह सुन्दर नगरी महलों, स्वर्ण, मणियों, चौपालों से सजी हुई गलियों वाली, प्राकारों, गोपुरों, तालाबों, कुंओं, बगीचों, कुञ्जों और भवनों से युक्त अति धन्य थी।।६७।।

यस्यां वसन्ति यदवः कृतपुण्यपुञ्जाः,
सर्वेऽपि देववपुषो धनिनो युवानः।
धीरा गभीरवचना रणसम्मुखीना,

हीनक्रियासु विमुखाः सुमुखाः सुखज्ञाः ।।६८।।

जिस नगरी में अनेक पुण्यकर्मा, देवताओं जैसे शरीरवाले, धनी, युवक, गम्भीर वचनों वाले, रण में शत्रुओं का सामना करने वाले, तुच्छ क्रियाओं से विमुख, सुन्दर मुखवाले, सुखों को जानने वाले यदुवंशी निवास करते हैं।।६८।।

एवंविधां हरिपुरीमभिवीक्ष्य विद्वान्,
द्रष्टुं समुत्सुकमनाः प्रभुपादपद्मं।
पप्रच्छ नागरकुमारगणं मुदेति,
हें वत्सका कथयत क्व मुरारिसद्म।।६९।।

इस प्रकार की हरि की पुरी को चारों ओर से देखकर प्रभु के चरण कमलों के सम्बन्ध में पूछने को उत्सुक होकर नगर के कुमारों को आनंद से पूछने लगे-'हे बेटो! बताओ कि मुरारि का घर कहां है?'।।६९।।

आकर्ण्य कर्णहरणीं हरिभृत्यवाणीं,
ते बालका इति तमूचुरुपास्यमानाः।
ब्रह्मन्भवन्तमधुनैव हरिन्नयामः,
पूर्वम्पुनीहि भगवन् द्विज नो गृहाणि।।७०।।

हरि के सेवक की कानों को भाने वाली वाणी सुनकर वे बालक उनकी उपासना करते हुए बोले-हे भगवन्! आपको अभी भगवान के पास ले चलते हैं। हे ब्राह्मणदेव! पहले हमारे घरों को पवित्र कीजिए।

ते तं प्रदर्श्य भवनानि निजानि मान्य-

मत्यादरेण च पुरीमपि दर्शयन्तः।
हर्म्याणि षोडशसहस्रमितानि भर्त्तु,
रुद्दिश्य विप्रमथ तत्र विजह्रुरारात्।।७१।।

उस माननीय को अपने भवन दिखाकर और अति आदर से नगरी को भी दिखाते हुए, वे स्वामी के सोलह सहस्र महलों को उस ब्राह्मण को दिखाकर, गायब हो गए।।

तान्यद्भुतानि मणिहेममयानि विष्णो-
रुद्दामधामनिकराणि वराणि पश्यन्।
कस्मिन्भविष्यति गृहे न भविष्यतीति,
सञ्चिन्त्य चैकनिलयं शनकैर्विवेश।।७२।।

भगवान विष्णु के उन मणियों और स्वर्णमय अत्यन्त अद्भुत श्रेष्ठ धामों के समूह को देखते हुए वे,' किस घर में प्रभु होंगे? पता नहीं होंगे भी या नहीं?' यह सोचते हुए एक घर में धीरे से प्रविष्ट हो गए।।७२।।

तत्रेन्दुकुन्ददरगौरवरे गृहेन्तः,
सिंहासने मणिमये स्थितमात्ममित्रम्।
पीताम्बरैर्मुकुटकुण्डलकंकणैश्च,
दृष्ट्वा विभूषितमवाप परां मुदम् सः।।७३।।

वहां चंद्रमा और कुन्द पुष्प के समान गौर वर्ण घर के अन्दर मणिमय सिंहासन पर स्थित, पीताम्बर, मुकुट, कुण्डल और कंकणों से सुशोभित अपने मित्र को देखकर वे परमानंद को प्राप्त हुए।।७३।।

शांतं शिवेतरहरं शरणागतानां,
कान्तं किशोरवयसं सुषमापयोधिम् ।
चन्द्राननं वनजनेत्रमुदारहासं,
लक्ष्मीनिवासमलकावृतसत्कपोलम् । ।७४ । ।

वहां शान्तरूप, शरणागतों के अमंगलों को हरने वाले, सुन्दर, किशोरावस्था के, सौन्दर्य के सागर, चन्द्र जैसे मुख वाले, कमल के समान नेत्र वाले, उदार हास्य वाले, लक्ष्मी-निवास, अलकों से ढकी हुई सुन्दर गालों वाले- । ।७४ । ।

मत्तालिपुञ्जकलगुञ्जितवन्यमाला,
विभ्राजमानमुरसि द्विजपादचिन्हम् ।
देवाधिदेवनरकिन्नरगीतकीर्तिम्,
भक्तार्तिभञ्जनमजं जनकल्पवृक्षम् । ।७५ । ।

मस्त भंवरों के गुञ्जार से युक्त वनमाला पहने हुए, छाती पर ब्राह्मण (भृगु) के पांव का चिन्ह धारण किए हुए, देवाधिदेवों, नरों तथा किन्नरों से कीर्तिगान किए जाते हुए, भक्तों के दुःख को दूर करने वाले, अजन्मा, जन-जन के लिए कल्पवृक्ष के समान- । ।७५ । ।

फुल्लारविन्दनयनं मणिकुण्डलाढ्यं,
कण्ठस्थकौस्तुभमणिं हरिमब्जनाभम् ।
भाले विशालतिलकं तिलकं यदूनां,
कीरास्यनासिकमुपासकदुःखनाशम् । ।७६ । ।

खिले कमल के समान नयनों वाले, मणिकुण्डलों से युक्त, गले में कौस्तुभ मणि धारण किए हुए, कमलनाभ, मस्तक पर विशाल तिलक लगाए हुए, तोते की चोंच के समान नासिका वाले,

उपासकों के दुःखों को नष्ट करने वाले, यदुकुल के तिलक प्रभु को-।।७६।।

आजानुलम्बितभुजं विशदोरुजंघं,
पञ्चास्यमध्यमुरुवक्षसमम्बुदाभम्।
राजाधिराजसुरराजसुपूजितांघ्रिम्,
पुण्यातिपुण्यमहिमानममानमोहम्।।७७।।

घुटनों तक लम्बी भुजाओं वाले, विशाल घुटनों और जांघों वाले, सिंह के मध्य भाग के समान जांघों और वक्षस्थल वाले, मेघवर्ण, राजाधिराज और देवराज द्वारा पूजित चरणों वाले, अति पवित्र महिमा वाले, अभिमान और मोह से रहित-।।७७।।

ध्यायन्ति यं मनसि योगरता मुनीन्द्रा,
गायन्ति यं निगमशास्त्रविदो विदग्धाः।
शेषोऽप्यशेषवदनैर्गणयन्गुणांश्च,
यस्य प्रयाति नहि पारमपारकीर्तेः।।७८।।

योगलीन मुनिराज जिनका मन में ध्यान करते हैं, वेदशास्त्रों के ज्ञाता विद्वान जिनका गान करते हैं, सम्पूर्ण मुखों से उनके गुणों को गाते हुए भी शेषनाग जिन आपारकीर्ति का पार नहीं पा सकते।।७८।।

कृष्णोपि नित्यविहितानि विधाय कर्मा-
ण्याज्ये समीक्ष्य मुखमात्मसखं समक्षे।
ब्राह्म्या श्रिया परमयाऽतिपरिष्कृतं तं,
द्वारीव चित्रलिखितं नितरान्ददर्श।।७९।।

कृष्ण ने भी नित्य कर्मों को निपटाकर, घी में अपना मुख देखकर, अपने सामने ब्राह्मी शोभा से परम परिष्कृत अपने उस मित्र

को दरवाजे पर चित्रलिखित सा अच्छी तरह देखा।।७९।।

भस्मावगुण्ठितललाटमथाक्षमालां,
कण्ठे दधानमतिदीर्घजटा वहन्तम्।
पीतोपवीतपरिवीतमुरोविशालं,
गंगाधरस्य महिमानमिवाहरन्तम्।।८०।।

मस्तक पर भस्म धारण किए हुए, गले में रुद्राक्ष की माला पहने हुए, अति दीर्घ जटा बढ़ाए हुए, पीला यज्ञोपवीत विशाल छाती पर धारण किए हुए, शंकर की महिमा को मानो धारण करते हुए-।।८०।।

विद्यातपोदमसमाधिशमादिसम्पत्,
साम्यादिसद्गुणयुतं गतदम्भदर्पम्।
तीव्रानुरागकलयोत्पुलकं कृशांगं,
प्रेमस्रुताश्रुनिकरं हरिभक्तिमूर्तिम्।।८१।।

विद्या, तप, आत्मदमन, समाधि और शांति आदि की सम्पत्ति वाले, समता आदि सद्गुणों से युक्त, दम्भ और अभिमान से रहित तीव्र अनुराग के कारण रोमांचित, दुर्बल अंगों वाले, प्रेम से आंसू बहाते हुए, हरि भक्ति के साक्षात् स्वरूप-।।८१।।

मित्रं सखेति नितरां मम किं सुदामा,
तारस्वरेण कथयन्मुहुरच्युतोऽपि।
त्यक्त्वासनं युवतिभिः सह धावमानः,
शीघ्रं प्रसारितभुजो द्विजमालिलिंग।।८२।।

मित्र को 'क्या यह मेरा मित्र सुदामा ही है?' ऐसा उच्च स्वर से कहते हुए कृष्ण ने भी आसन को त्याग कर अपनी पत्नियों के साथ

दौड़ते हुए जल्दी से भुजाएं फैलाकर उस ब्राह्मण सुदामा को गले लगा लिया।।८२।।

गाढं निपीड्य हृदयेन तदीयदेहं,
हस्तेन हस्तमवलम्ब्य निजस्य सख्युः।
तं स्वागतेन वचसा पुनरर्चयन्सः,
शय्यां निनाय नयवित्सह नायिकाभिः।।८३।

उस के देह को हृदय से कस के दबा कर, अपने मित्र के हाथ को हाथ में ले कर, स्वागत-वचनों से फिर उन की पूजा करते हुए अपनी पत्नियों सहित वे नीतिज्ञ उन्हें अपनी शैया पर ले गये।।८३।।

तल्पस्थमेनमपि मित्र सखेति विद्वन्,
ब्रह्मन्सहोदर वयस्य यशस्य साधो।
प्रेम्णा ब्रुवन्परिमृजंश्च तदीयपाद-
रेणुं स्वकीयवसनेन जहर्ष विष्णुः।।८४।।

बिस्तर पर स्थित उन्हें 'हे मित्र, सखे, विद्वन, सहोदर, वयस्य, यशस्वी, साधो आदि प्रेमपूर्वक बोलते हुए विष्णु उन के पांवों की धूलि को अपने वस्त्र से साफ करते हुए प्रसन्न हुए।।८४।।

रुक्मिण्युपानय जलं द्विजपादशुद्ध्यै,
त्वं लक्ष्मणेऽर्घ्यमपि चाचमनीयमत्र।
कालिन्दि वीजय सति व्यजनेन सत्ये,
त्वञ्चामरेण परिपूजय मित्रविन्दे।।८५।।

हे रुक्मिणि! तुम ब्राह्मण के पांवों को साफ करने के लिये जल लाओ,हे लक्ष्मणे! तुम अर्घ्य और आचमनीय यहां लाओ, हे कालिन्दि! तुम पंखा करो, हे सत्ये! तुम चंवर डुलाओ, हे मित्रविन्दे! तुम पूजन

करो ।।८५।।

त्वं साम्बमातरमुमाशु सुगन्धितैले-
नामर्दयामुमबले हिमवारिणा च।
संस्नापय प्रमुदितास्य जटा विमुञ्च,
श्यामे कुरंगनयने गजगामिनि त्वम्।।८६।।

हे साम्बमाता! तुम सुगन्धित तेल इन्हें मलो, ठंडे जल से स्नान कराओ, प्रसन्न भाव से इनकी जटाएं छुड़ाओ, हे श्यामे,हिरण जैसी आंखों वाली, हे गजगामिनि!।।८६।।

राज्ञ्यश्चिरागतममुं द्विजदेवमेतं,
शुश्रूषया मम सखायममार्यमीड्यम्।
या सेवनेऽस्य विमुखी भवतीष्वभाग्या,
सा मे प्रिया नहि भविष्यति सत्यमेतत्।।८७।।

हे रानियो! चिरकाल पश्चात् आये, मेरे सखा, पूज्य इन ब्राह्मणदेवता की सेवा करो। जो अभागिन इन की सेवा से विमुख होगी वह मेरी भी प्रिया नहीं रहेगी यह मैं सत्य कहता हूँ।।८७।।

भूदेवमर्चत सुताः सह दारवर्गै,
र्जानीत मे गुरुसहोदरमत्युदारम्।
एतेन साकमबलास्तनुजा मया प्राग्,
हर्षादपाठि गुरुतो गुरुवेदराशिः।।८८।।

हे पुत्रो! अपनी स्त्री-वर्ग सहित इन भूदेव(ब्राह्मण) की पूजा करो। मेरे इन अत्यन्त उदार गुरुकुल के सगे भाई को जान लो। हे पत्नियो-पुत्रो! इनके साथ ही मैंने पहले गुरु से विशाल वेदराशि को पढ़ा

था।।८८।।

संयोज्य पूजनविधौ सुतदारवृन्दान्,
स्वे स्वे समर्चनविधौ प्रवणाश्च तेऽपि।
अंके निधाय चरणौ पृथिवीसुरस्य,
मार्गश्रमापनयनाय हरिर्ममर्द।।८९।।

हरि ने अपने पुत्र और स्त्री-समूह को पूजन-विधि मं लगा दिया। वे भी अपनी-अपनी पूजन विधि में निपुण थे। उन पृथ्वी के देवता(ब्राह्मण) के चरणों को गोदी में रखकर हरि ने मार्ग की थकावट को दूर करने के लिये उन्हें मला।।८९।।

काश्चिज्जटाः कमलपाणिभिरादरेण,
स्वामूमुचन्कनकवर्तिकया महिष्यः।
तैलं ममर्दुरपराः सुरभि द्विजस्य,
चान्या निमज्जयितुमेनमवापुरद्भिः।।९०।।

कुछ रानियों ने अपने कमल-कोमल करों में सोने की सलाइयां लेकर जटाओं को छुड़ाया, अन्यों ने सुगन्धित तेल मला, और दूसरियों ने स्नान के लिये जल पहुंचाया।।९०।।

काश्चन विभूषणवराणि परार्घ्यवस्त्रा-
ण्यादाय चेष्टसुरभीणि विलेपनानि।
माल्यानि मौक्तिकमयानि च कौसुमानि,
रामा रमाप्रियसखं व्यतरन्समग्राः।।९१।।

कुछ ने श्रेष्ठ गहनों तथा परम मूल्यवान वस्त्रों ,सुगन्धित विलेपनों, मोतियों तथा फूलों की मालाओं को ला कर भगवान के प्रिय

सखा को अर्पण कर दिया।।९१।।

सख्युर्मुनेर्विधिवदात्मकलत्रपुत्रैः,
श्रद्धानुरागपरिपूर्णमनोभिरद्धा।
शुश्रूषणं स भगवानिति कारयित्वा,
व्यानञ्च तं स्वयमपि प्रथितोपचारैः।।९२।।

श्रद्धा और अनुराग से पूर्ण मन वाले अपने स्त्री-पुत्रों द्वारा उन सखा और मुनि की विधिवत् सेवा करवा कर भगवान ने स्वयं भी प्रसिद्ध उपचारों से उन की पूजा की।।९२।।

प्रक्षाल्य पादजलजावतिथेः स कृष्णः,
शुद्धोदकेन तदपोऽनुदधार मूर्ध्नि।
दारात्मजप्रभृतिभिः सह च स्वगेहे,
स्नेहार्द्रकञ्जनयनः शिथिलांगयष्टिः।।९३।।

अतिथि के चरण-कमलों को शुद्धजल से धो कर स्नेह से आर्द्र, शिथिल अंग वाले कमलनयन श्रीकृष्ण ने अपने घर में स्त्री-पुत्रों सहित उस जल को मस्तक पर धारण किया।।९३।।

तं धूपदीपहरिचन्दनपुष्पहारैः,
स्वात्मात्मजात्मगृहदारसमर्पणैश्च।
सम्पूज्य पूज्यतम पूज्यपदारविन्दो,
ब्रह्मण्यदेव इति नाम चकार सत्यम्।।९४।।

धूप, दीप, हरिचंदन पुष्पहारों से तथा अपने पुत्र, स्त्रियों का समर्पण करते हुए स्वयमात्मा, कृष्ण ने उन पूज्यतम के चरणकमलों की पूजा कर 'ब्रह्मण्यदेव' इस नाम को सत्य सिद्ध कर दिया।।९४।।

सम्भोज्य तं रसरसान्नमसौ चतुर्धा,
संभुज्य च स्वयमपि प्रभविष्णुरीड्यः।
तेन स्वसज्जनजनेन जनार्तिहारी,
शय्यां रुरोह मणिकुट्टिमधामनीशः।।९५।।

उन्हें चतुर्धा सरस भोजन करवा कर और स्वयं भी भोजन करके प्रभावशाली, पूज्य, जन-कष्ट-निवारक श्री कृष्ण उन अपने मित्र के साथ मणिमय महल में शैया पर स्थित हो गये।।९५।।

ताम्बूलभूषितमुखौ कृतपुण्यपुञ्जौ,
वैकासनौ सितसितेतरशुद्धवर्णौ।
श्रीरामलक्ष्मणयुगस्य परामभिख्या-
माजह्रतुर्द्विजयदुप्रवरौ सखायौ।।९६।।

पान से शोभित मुख वाले, अनेक पुण्य करने वाले, एकासन पर स्थित, श्वेत-श्याम वर्ण वाले उन द्विजवर और यदुवर मित्रों ने मानों श्रीराम-लक्ष्मण-युगल की परम प्रसिद्धि को छीन लिया।।९६।।

कच्चित्समाप्य निगमान्भवता विवाहः,
सम्यक्कृतो गुणवती रमणी तवास्ति।
पुत्रा वशे कुशलिनी तव जीविका किं,
वेदत्रयीं पठसि पाठयसीह विप्रान्।।९७।।

(श्रीकृष्ण सुदामा से पूछने लगे) क्या आपने शास्त्रों का अध्ययन समाप्त करके अच्छी विधि से विवाह कर लिया है? आपकी पत्नी गुणवती है ना? पुत्र वश में हैं? जीविका कुशलपूर्वक है? तीनों वेदों का पठन-पाठन चल रहा है ना?।।९७।।

भ्रात: कृता मयि कृपा महती त्वयाहो,
भाग्येन दर्शनमिदं तव शर्मदं मे।
आसीच्चिराय मनसो मम वासनेयं,
त्वत्पूजने भगवता सफलीकृताद्य।।९८।।

हे भाई! तुमने मुझ पर बड़ी कृपा की है। भाग्य से ही तुम्हारा कल्याणकारी दर्शन प्राप्त हुआ है। मेरे मन में बहुत देर से ऐसी इच्छा थी। तुम्हारे पूजन के रूप में भगवान ने आज वह सफल कर दी है।।९८।।

त्वत्पादतीर्थपयसाद्य पवित्रदेहो,
जातोऽस्म्यहं जगति दिष्टवतां वरिष्ठ:।
यस्योपरि प्रभुरसौ दययेत्पुरारि-
स्तं तर्हि संगमयते भवहा भवत्सु।।९९।।

तुम्हारे चरण-तीर्थ के जल से पवित्र देह वाला होकर आज मैं भाग्यशालियों में श्रेष्ठ हो गया हूँ। जिस पर वे प्रभु शंकर विशेष दया करें उसी को संसार से मुक्त करने वाले वे आप लोगों का संगम प्राप्त करवाते हैं।।९९।।

कच्चित्स्मरस्यपि मया सह नातिदीर्घ-
माचार्यधामनि कृतं सुखवासमंग।
विद्यार्थिनोऽतिनिपुणांश्च कुशाग्रबुद्धीन्,
सान्दीपिनं गुरुवरं गुरुमातरञ्च।।१००।।

क्या कभी गुरु-गृह में मेरे साथ हुए थोड़े समय के सुखद निवास का स्मरण करते हो? अतिनिपुण, तीव्र बुद्धि वाले विद्यार्थियों, गुरुवर सान्दीपनि और गुरुमाता का क्या कभी स्मरण आता है?।।१००।।

कालः सुमंगलमयः स बभूव भद्र,
योऽवन्तिकाख्यनगरे गमितः सुखेन।
सम्प्रत्यमुष्य गहनस्य गृहस्थसिन्धोः,
पारं समृद्धविभवाः अपि नैव यामः।।१०१।।

अवन्तिका नामक नगर में हमने जो सुख से बिताया था वह समय बड़ा मंगलमय था। अब समूचे वैभव वाले होने पर भी हम इस गहन गृहस्थ-सागर के पार जा नहीं सकते।।१०१।।

मित्राधुनापि महती मम भावनेयं,
श्रीविश्वनाथनगरे निवसेयमाशु।
किन्तूग्रगेहवनितातनुजादिपाशै-
र्बद्धस्य सम्प्रति सखे गमनं क्व चास्ति।।१०२।।

हे मित्र! आज भी मेरी यह बहुत तीव्र भावना है कि मैं श्री विश्वनाथ की नगरी(काशी) में शीघ्र ही निवास करूँ। किन्तु घर, पत्नी, पुत्रादि पाशों से बंधे हुए का गमन कहां हो पाता है।।१०२।।

भागीरथीविमलवारिविलग्नवप्रा
या स्थापिता स्थपतिना सुविरच्य शूले।
तापत्रयोपशमनी कमनीयकान्तिः,
काशीपुरी सुनिगमागमबोधराशिः।।१०३।।

गंगा के निर्मल जल से लगी हुई सीढ़ियों वाली नगरी स्वयं भगवान शिव ने अच्छी तरह बना कर अपने शूल पर स्थापित की थी, तीनों तापों को शान्त करने वाली, सुन्दर कान्ति वाली, वेद और शास्त्रों के ज्ञान का पुंज वह काशी नगरी है।।१०३।।

संख्यावतामखिलशास्त्रविदां न संख्या,
गौरीगणेश्वरमहेश्वरभैरवाणाम् ।
संन्यासिनां द्विजगवाञ्च मठाधिपानां,
ताम्बूलपुष्पफलविक्रयिणाञ्च यत्र ।।१०४।।

सम्पूर्ण शास्त्रों के ज्ञाताओं, गौरी के गणों तथा महेश्वर शिव के भैरवों, संन्यासियों, ब्राह्मणों, गायों और मठाधीशों, पान, पुष्प और फलविक्रेताओं की संख्या का तो वहां पता भी नहीं चलता।।१०४।।

वेदान्पठन्ति बटवः पटवः क्वचिच्च,
शास्त्राणि शास्त्ररसिका रसवन्ति नित्यम् ।
कुत्रापि शब्दनयगा विवदन्ति वादान्,
पौराणिकाः क्वचिदपि प्रवदन्ति गाथाः ।।१०५।।

कहीं निपुण ब्रह्मचारी वेद पढ़ते हैं, कहीं शास्त्रों के रसिक सरस शास्त्रों का पाठ करते हैं, कहीं शब्दशास्त्रज्ञ वाद-विवाद करते हैं, कहीं पौराणिक गाथायें कहते रहते हैं।।१०५।।

नित्योत्सवा प्रतिदिनञ्च सुमंगलानि,
पर्वाणि सप्तसु दिनेषु नवानि यत्र ।
मोक्षाय मृत्युरपि यत्र भवेदवश्यं,
भूतिर्विभूषणमहोप्यथ वाक्षमाला ।।१०६।।

जहां नित्य उत्सव होते रहते हैं, प्रतिदिन मंगलकार्य सम्पन्न होते हैं, जहां सातों दिन नये-नये पर्व रहते हैं। जहां मृत्यु निश्चित रूप से मोक्ष के लिये होती है,जहां भस्म अथवा अक्षमाला ही भूषण है।।१०६।।

यत्रेश्वरी भगवती सदयान्नपूर्णा,
तूर्णं ददाति मनसेप्सितमन्नमम्बा।
विश्वेश्वरोऽपि शरणागतवत्सलोयं,
कं कं न साधयति काममिहाश्रितानाम्।।१०७।।

जहां ईश्वरी,भगवती,दयालु अन्नपूर्णा मां मनचाहा अन्न तुरन्त दे देती हैं। शरणागतवत्सल विश्वेश्वर भी अपने आश्रितों की किस कामना को वहां पूर्ण नहीं करते?।।१०७।।

यं यं त्वमिच्छसि वरं वृणु तं तमेव,
सर्वं ददामि भवते द्विजभूषणाय।
भ्रातृप्रियाप्रहितवस्तु यदस्ति मह्य-
मानीतमत्रभवतापि च तत्प्रयच्छ।।१०८।।

जो जो वर आप चाहते हो वह मांगो, आप ब्राह्मणों के भूषण को वह सब मैं देता हूं। भाभी द्वारा भेजी गई जो वस्तु आप लाये हो वह दो।।१०८।।

विश्वम्भरेण हरिणा करुणाकरेण,
सम्प्रार्थितोऽग्रजनि आत्मविदां वरिष्ठः।
दातुं न वाञ्छति यदा त्रपयाक्षतानि,
कक्षात् प्रसह्य भगवान्स्वयमुज्जहार।।१०९।।

विश्वम्भर,दयालु हरि द्वारा मांगे जाने पर आत्मवेत्ताओं में श्रेष्ठ ब्राह्मण जब लज्जा से चावल नहीं देना चाहते थे, तो भगवान ने उन की बगल से वे जबर्दस्ती स्वयं ही खींच लिये।।१०९।।

भक्त्या त्वयोपहृतमल्पमपीदमन्नं,

सन्तुष्टये सकलविश्वशरीरिणो मे।
विद्वन्नलं प्रियसुहृन्न पुनःप्रदत्तं,
भक्तिं विना धनमदान्धजनेन भूरि।।११०।।

हे विद्वन्! प्रिय मित्र! तुम्हारे द्वारा भक्तिपूर्वक लाया गया थोड़ा सा भी अन्न सकल विश्व की आत्मारूप मेरी सन्तुष्टि के लिये पर्याप्त है, किन्तु भक्तिरहित, धन के मद से अन्धे जन द्वारा दिया गया बहुत सा भी मुझे सन्तुष्ट नहीं कर सकता।।११०।।

प्रेम्णात्तुमक्षतलवान्प्रवणं समीक्ष्य,
राज्ञ्योऽपि विश्वपतिमीयुरिमं समन्तात्।
स्वामिन्विभज्य परिभुंक्ष्व पदार्थमेन-
मस्मासु विप्रसुहृदोपनतं महात्मन्।।१११।।

चावल के कणों को प्रेम से खाने में तत्पर प्रभु को देख कर विश्व के स्वामी की रानियां भी उनके चारों ओर आ गईं।' हे स्वामिन्! हे महात्मन्! अपने मित्र ब्राह्मण द्वारा लाये गये पदार्थ को हम सब को बांट कर ही खाओ'।।१११।।

संभुज्य दारतनयैः सह कृष्णदेवो,
विप्रार्थितान्नमतिमानपुरःसरं सः।
तुष्टिञ्जगाम परमां परमः कृपालु-
र्यत्तुष्टयेऽलमिह नैव भवन्ति यज्ञाः।।११२।।

अपनी स्त्री-पुत्रों के साथ ब्राह्मण द्वारा लाये अन्न को बांटकर अति सम्मान के साथ खा कर वे परम कृपालु श्रीकृष्ण अत्यन्त प्रसन्न हो गये। जब कि यज्ञ भी उन्हें प्रसन्न करने में समर्थ नहीं होते।।११२।।

सम्पूजितोऽमरवरेण सभाजितश्च,

स ब्राह्मणो जितसखः समुवाच कृष्णम् ।
संस्मृत्य कृष्ण चरितानि तवाद्भुतानि,
जीवाम्यभद्रदमनानि च शंतमानि । ।११३ । ।

देववर द्वारा संपूजित और सत्कृत, मित्र के मन को जीतने वाले वे ब्राह्मण श्रीकृष्ण से बोले- हे कृष्ण! अमंगलों को दबाने वाले और कल्याण करने वाले तुम्हारे अद्‌भुत चरित्रों का स्मरण कर-कर के ही मैं जीता हूं। ।११३ । ।

संकीर्तयंस्तव गुणान्कवयन्स्मरंश्च,
संस्मारयन्नपि पठन्परिपाठयंश्च ।
गायन्स्वयं द्विजसुतानथ गापयंश्च,
कालं नयामि च सुखेन भवज्जनोऽहम् । ।११४ । ।

तुम्हारे गुणों का संकीर्तन तथा उन पर काव्य-रचना करते हुए, स्मरण, पठन-पाठन, गायन और दूसरों को स्मरण कराते और ब्राह्मणपुत्रों से गान कराते हुए आप का यह जन(मैं) सुखपूर्वक समय बिता रहा हूं। ।११४ । ।

वृष्णीश कृष्ण करुणामय दीनबन्धो,
भक्तार्तिभञ्जन निरञ्जन मञ्जुलेज्य ।
पृथ्वीद्विजादितिजगोजहितावतार,
मन्मानसे निवस नित्यमितीशं याचे। ।११५। ।

हे वृष्णिराज, कृष्ण, करुणामय, दीनबन्धु, भक्तों के क्लेशों को नष्ट करने वाले, निरञ्जन, सुन्दर यज्ञों को करने वाले, पृथ्वी, ब्राह्मणों, देवों, गौओं तथा ब्रह्मा के हित के लिये अवतार लेने वाले, हे ईश्वर! मैं यही याचना करता हूं कि आप नित्य मेरे मन में निवास

